# गौरी काञ्चलिका तन्त्रम् ।

श्रीमन्महादेव प्रणीतम् ।

—+✱+—

श्रीभुवनचन्द्र वसाकेन प्रकाशितम् ।

( कलिकाता, निमतला घाट ष्ट्रिट नं ८ )

—+×+—

द्वितीय संस्करणम् ।

——×——

कलिकातापरगणान्तर्गत दमदमाख्य स्थाने

संवादज्ञानरत्नाकर यन्त्रे — श्रीवेणीमाधव वसाकेन

मुद्रितम् ।

१८८१



# सूचीपत्रम् ।



# गौरी काञ्चलिका तन्त्रम् ।



श्रीदेव्युवाच ।

ज्ञातं भवत्प्रसादेन यथाकालस्य वञ्चनम्
मन्त्रस्य सारसंभूतमिदानीमौषधं वद ॥
येन सिद्ध्यन्ति देहानि सन्निताानि हिताय च ।
जरारोग हरं कल्पं तद्वद त्रिपुरान्तक ॥
सन्त्यौषधान्यनेकानि मनुष्याणां हिताय च ।
पूर्वन्तु यत्त्वया प्रोक्तं प्रत्यक्षं कथयस्व मे ॥

श्रीईश्वरोवाच ।

तिथिनक्षत्रवारेण ऋतुभेदैः परिग्रहः ।
खननोत्पाटनं मन्त्रैः कारयेद्वै चिकित्सकः ॥
औषधं कालयोगेन गृह्णाति परमं बलम् ।
शरद्धेमन्तयोर्देवि त्वचो मूलस्य संग्रहः ॥
शिशिरे च फलं सम्यक् मूलं सारसमन्वितम् ।
वसन्ते पुष्पपत्रञ्च ग्रीष्मे च फलबीजके ॥
स्वकाले बलवन्तोपि वर्षासु तरवः सदा ।
मूले शुष्के बलं चार्द्रं मूलादौ भेषजे तथा ॥
ग्रीष्मवर्षिकयोरेतत् शरत् संपूर्णादौ भवेत् ।
वृक्षादीनां फलं बीजं स्वकीये च ऋतौ तथा ॥
अब्वत् प्ररितः सर्व्वा ओषध्यः परिकीर्त्तिताः ।
जलजा स्थलजा वृक्षा लताश्चापि तथैव च ॥

ग्राम्यश्वारगुल्मवल्ली चौषध: परिकीर्त्तिता: ।
जातिर्द्रव्यं गुणं चिह्नैरौषधं व्याधिसंश्रयम् ॥
जलपुष्पलता एव स्वकाले बलिनस्तथा ।
निशायां जलजा वीर्य्या: स्थलजा बलिनो दिवा ॥

अथ रोगजन्म नक्षत्रफलम् ।

कृत्तिकायां कदाचिद्वै व्याधिरुत्पद्यते क्वचित् ।
नवरात्रं भवेत् पीड़ा त्रिरात्रं रोहिणीषु च ॥
मृगशीर्षे पञ्चरात्रम् आर्द्रा प्राणैर्व्विमुच्यते ।
पुनर्व्वसौ च पुष्यायां सप्तरात्रं विधीयते ॥
नवरात्रं तथाश्लेषा श्मशानान्तं मघासु च ।
द्वौमासौ पूर्व्वफल्गुन्यमुत्तरासु त्रिपञ्चकम् ॥
हस्ताभ्यां सप्तमे मोक्ष: चित्रायामर्द्धमासकम् ।
मासद्वयं भवेत् स्वात्यां विशाखे विंशतिर्द्दिनम् ॥
मैत्रेचापि दशाहानि ज्येष्ठायामर्द्धमासकम् ।
मूलेन जायते शेषं पूर्व्वाषाढ़ा त्रिपञ्चकम् ॥
जनविंशोत्तराषाढ़ा द्वौमासौ श्रवणा तथा ।
धनिष्ठायामर्द्धमासो वारुणेच दशाह्निकम् ॥
पूर्व्वभाद्रपदे देवि जनविंशति वासरान् ।
त्रिपक्षञ्चाप्यहि व्रध्ने रेवत्यां दशरात्रकम् ॥
अहोरात्रे चाश्विनीञ्च भरण्याञ्च गतायुषम् ।
एवं क्रमेण जनीयान्नक्षत्रेण यथोदितम् ॥
उरगशतभिषार्द्रा स्वातिमूलात्रिपूर्व्वा,
शनिरविकुजवारा: क्रूरतारा विवर्ज्ञा: ।
यदि भवति चतुर्थी चाष्टमी भूतषष्ठी ।
परिहर तिथिमेतां रोगिनां मृत्युकालम् ॥

पञ्चमी चन्द्रवारे च द्वितीया च बृहस्पतौ ॥
शुक्रे चैव चतुर्थी च रोगिणां मृत्युमादिशेत् ।
सप्ताहं वारयोगेन त्रिगुणां तिथिसंयुतम् ॥
तिथिनक्षत्रयोर्मासं त्रिभिः कालेन जीवति ॥

अथ मृत्युचिह्नम् । श्रीदेव्युवाच ।

यानि चिह्नानि मरणान्नृणां पूर्व्वं भवन्ति हि ।
तानि चिह्नानि कतिचित् ब्रूहि मे जगदीश्वर ॥

श्रीईश्वरोवाच ।

वदामि कालचिह्नानि जायते यानि देहिनः ।
मृत्यौ निकटमापन्ने तवैतानि निशामय ॥
यस्य नासापुटे वायुर्यस्य वाति दिवानिशम् ।
अखण्डमेव तस्यायुः चरेदङ्का त्रयेण हि ॥
अहोरात्रं त्र्यहोरात्रं वायुर्व्वहति सन्ततम् ।
सार्द्धैकमासं तस्येयं जीवितं खलु चोच्यते ॥
वहिर्नासापुटे युग्मे दशाहानि निरन्तरम् ।
वायुश्चेत् सह संक्रान्तं स जीवति दिनद्वयम् ॥
नासावर्त्मद्वयं हित्वा यस्य वायुर्मुखात् वहेत् ।
सचेद्दिनद्वयं स्थित्वा ततो यमपुरं व्रजेत् ॥
सूर्य्ये सप्तमराशिस्थे जन्मसंस्थे निशाकरे ।
पूर्णः स कालो द्रष्टव्यो यदि याम्ये वहेद्रविः ॥
अकस्माद्दीक्षते यस्तु पुरुषं कृष्णपिङ्गलम् ।
तस्मिन्नेव क्षणे रूपं स जीवेद्वत्सरद्वयम् ॥
यस्य वीर्य्यं मलं मूत्रं क्षतं शुक्रमनन्तरम् ।
दृष्टैकदा भवेन्नापि चाब्दं तस्यायुरुच्यते ॥
इन्द्रनीलनिभं व्योम्नि नगे धूम्रं समीक्षते ।

दृतस्ततः प्रहमरं षण्मासश्च सजीवति ॥
अरुन्धतीं ध्रुवश्चैव विष्णोस्त्रीणि पदानि च ।
आसन्न मृत्युर्नो त्पश्येच्चतुर्थं मातृमण्डलम् ॥
आर्द्रेक्षिवारे सूर्य्यस्य पृष्ठीकृत्य दिवादिकम् ।
प्रकृत्याषु च पश्येत् वा षण्मासेन स मृत्यु भाक् ।
वेत्ति नीलादिवर्णस्य कट्वम्लादि रसस्य च ।
अकस्मादन्यथाभावं षण्मासेन स मृत्युभाक् ॥
षण्मास मृत्युलोकस्य कण्ठोष्ठरसनारदाः ।
शुष्यन्ति सततं तत्तद्विच्छायस्यानुपश्चमाः ॥
रेतः कवचनेत्रान्ता मलिमानं भजन्ति वै ॥
तर्हि कीनासगरं षष्ठेमासि व्रजेन्नरः ॥
संप्रहृते त्रिभुवने मध्याह्ने वेति यो नरः ।
निश्चितं पञ्चमे मासि धर्म्मराजा तिथिर्भवेत् ॥
द्रुतमारस्य शकटं तीक्ष्णोग्रं यस्य मस्तकम् ।
ध्रुवं प्रयाति तस्यायुः षण्मासात् परिसंक्षयम् ॥
सुस्नातस्यापि यस्याशु हृदयं परिशुष्यति ।
चरणौ च करौ चापि त्रिमासं तस्य जीवितम् ॥
प्रतिबिम्बं भवेद्यस्य पदं खण्डपदाकृतिः ।
पांशौ वा कर्द्दमे वापि पञ्चमासाच्च जीवति ॥
देहः प्रकम्पते यस्य देहरन्ध्रेपि निश्चले ।
[illegible]ान्सदूतावर्षन्ति चतुर्थे मासि तं नरम् ॥
निजस्य प्रतिबिम्बस्य निश्चले सूदकादिषु ।
स[illegible] भ्रमाङ्गं न पश्येद्यः स मासेन विनश्यति ॥
[illegible]तभ्रंसेत् स्थले वापि धनुरेन्द्रं न पश्यति ।
[illegible]ा चन्द्रद्वयं वापि दिवा द्वौ च दिवाकरौ ॥

दिवा च तारकाचक्रं रात्रौ व्योम्नि विभावसुम्।
युगपच्च चतुर्दिक्षु शक्रकोदण्डमण्डलम्॥
भूधरे भूधराग्रे वा गन्धर्व्वनगरालयम्।
दिवानिशा च नृत्यञ्च एते पञ्चत्व हेतवः॥
कारावरुद्धश्रवणः संशृणोति न च ध्वनिम्।
स्थूलः कृशः कृशः स्थूल सदा मसान्निवर्त्तते॥
यः पश्योदात्मनः छायां दन्तनासा समाश्रिताम्।
दिनानि पञ्चजीवित्वा पञ्चत्व मुपयाति सः॥
भक्षते भक्षते देहं पिशाचासुरवायसैः।
भूतैः प्रेतैः श्वभिगृध्रैर्गोमायुर्मृगसूकरैः॥
शरभैः शलभैश्चेनैरश्वभिस्तोतरै वृकैः।
स्वप्ने संजीवितं दृष्ट्वा वर्षान्ते यममीक्षते॥
गण्डपुष्पांशुकैः शोनैः स्वतन्त्रं भूषितं नरः।
य पश्येत् स्वप्नसमयेऽष्टौमासान्न जीवति॥
पांशुराशिञ्च वल्मीकं यूपदण्ड मथापि वा।
योऽधिरोहतिवै स्वप्ने सोष्टमासां प्रणश्यति॥
रासवारुढ़मात्मानं तैलभ्यङ्गञ्च मण्डितम्।
यः पश्येत् स्वप्नसमये यमलोकं स गच्छति॥
स्वयोनौ स्वतनौ वापि यः पश्येत् स्वप्नगोचरः।
तृणानि शुष्ककाष्टानि षष्ठेमासेन तिष्ठति॥
लौहदण्डधरं कृष्णं पुरुषं कृष्णवाससम्।
स्वयं यो ग्रन्थितं पश्येत् स त्रिमासान्नलङ्घयेत्॥
कालीकुमारीं यः स्वप्ने वन्दीयात् बाऊपाशकैः।
स मासेन च न वीक्ष्येत् नगरीं यमनाश्रयाम्॥
अरी यो वानरारूढ़ो गच्छेत् प्राचीदिशं स्वपन्।

दिने समासे विंशेत नगरीं शमनाश्रयाम् ॥
स पञ्चाभिरात्रौ च स याति यामिकीं पुरोम् ।
नरो यो पञ्चमेनैव पश्येत् संशमनीं पुरिम् ॥
क्षपणोपि वदान्येवा वदान्यः क्षपणोऽपिवा ।
प्रकृते विकृतीश्चैस्यात्तदापञ्चत्व-मागता ॥
देवमार्गं ध्रुवं शक्रं सोमच्छाया मरुन्धतीम् ।
यो न पश्येत् दूरस्थोपि न जीवेत वत्सरात्परम् ॥
अरश्मिबिम्बं सूर्य्यस्य वह्निश्चैवांशुमालिनम् ।
दृष्टैकादश मासाच्च नचोर्द्धं स च जीवती ॥
हन्यते काकपंक्तिभिः पांशुवर्षति वामतः ।
स्वच्छायामन्यथा दृष्ट्वा चतुपञ्च सजीवति ॥
अशुभ्रां विद्युतं दृष्ट्वा दक्षिणां दिशमाश्रिताम् ।
तथा शक्रधनुर्व्वापि जीवितञ्च त्रिमासकम् ॥
घृते तैले तथा दर्शे तोये च तनुमात्मनः ।
यस्तु पश्येदशिरस्कां मासादूर्द्धं न जीवति ॥
यस्य वक्रे शवगन्धो गाले वसनयोरपि ।
तस्यार्द्धमासिकं ज्ञेयं योगिनोमपि जीवनम् ॥
यस्याञ्जै स्नातगात्रस्य कपोलमाशुशुष्यति ।
पतिस्वापि जलं पश्येत् दशाहं तस्य जीवनम् ॥
खरयानरयानस्थो यो गच्छेत् दक्षिणां दिशम् ।
स्वप्ने पश्यति तस्यापि मृत्युरेव न संशयः ॥
रक्तकृष्णाम्बरधरा गायन्ति वा हसन्ति च ।
दक्षिणायां नयेन्नारि स्वप्ने सोपि न जीवति ॥
नग्नं क्षपणकं स्वप्ने वेशमानं महाबलम् ।
एकं वा वीक्षयन्तं तं विद्यान्मृत्युरुपस्थितः ॥

आमस्तकं तलं जन्तु निमग्नं पङ्कसागरे ।
स्वप्ने पश्येत्तदायस्तु स सद्यो म्रियते नरः ॥
केशाङ्गार चिताभस्म भुजगां निर्ज्जलां नदी ।
दृष्ट्वा स्वप्ने दशाहे वा मृत्युरेकादशे दिने ॥
सूर्य्योदये शिवा यस्य क्रोशति याति सम्मुखम् ।
विपरीतं परीतं वा सद्यो मृत्युं सगच्छति ॥
यस्य वै भुक्तमात्रस्य हृदयं बाध्यते क्षुधा ।
जायन्ते दन्तहर्षाश्च सगतायुः न संशयः ॥
शक्रायुधं चार्द्धरात्रे चन्द्रस्य ग्रहणान्तथा ।
दृष्ट्वामन्येत संक्षीण मात्मजीवित मात्मवित् ॥
नासिका वक्रतामेति कर्णयोर्नमनोन्नति ।
नेत्रे वामं स्रवेद्द् यस्य सगच्छेद्द् यममन्दिरम् ॥
आरक्ततामेति च मुख जिह्वा च सामिषं सदा ।
तदा प्राज्ञो विजानीयात् मृत्युमासादयात्मकम् ॥
पिधायकर्णौ निर्घोषं न शृणोत्यात्मसम्भवम् ।
नश्येत् चक्षुषोर्ज्योति र्यस्य सोपि न जीवति ॥
एतानि कालचिह्नानि सन्धानि च बहूनि च ।
ज्ञात्वाभ्यासं नरो योग मथवा काशिकां व्रजेत् ॥
कालस्य वञ्चनोपायम् शृणं सत्यं वदाम्यहम् ।
विना एव मृत्युञ्जयं काशीनाथस्य पूजनात् ॥
तथैव रोगहन्त्याशु विनाचौषधि भक्षणात् ॥

अथ औषधोत्पाटनम् ।

भकूराह नयापूर्णा रिष्टिहीना तिथौ तथा ।
हदुलक्षु च दक्षच औषधोत्पाटने शुभः ॥

अथ ऋतुभेदः ।

अथातः सम्प्रवक्ष्यामि भैषज्य ऋतुभेदकम् ।
दिवारात्रौ तथायुज्यं वसन्तादि तथाक्रमात् ॥
वसन्तश्चैव पूर्व्वाह्ने ग्रीष्मे मध्याह्न उच्यते ।
वर्षायामपराह्ने वा प्रदोषे परदिस्मृत ॥
मध्यरात्रौ च हेमन्तः शिशिरे शेषरात्रके ।
दशदण्डक्रमाद्देवि जानीयात् ऋतुभेदकम् ॥
वशीकरण कर्म्मादि वसन्ते चैव कारयेत् ।
ग्रीष्मे विद्वेषणं कुर्य्यात् प्रावृड्विद्रावनं तथा ॥
शारदे शान्तिकञ्चैव हेमन्ते पुष्टिकान्तथा ।
शिशिरे मारणं कुर्य्यात् ऋतुकाल विभेदतः ॥
ऋतवः कथिताह्येते सर्व्वएव क्रमेणतु ।
वश्यादि कर्म्मसिद्धिश्च प्रयत्ने नापि सर्व्वतः ॥
तर्ज्जन्यादि समारूढं जपं जप्याद्‌ यथा क्रमात् ।

अथ चित्रकल्पः ।

रक्तचित्रं पलञ्चैव विडङ्ग गुड़कं तथा ।
एतेषां समता कुर्य्यात् पिष्ट्वाच वटिकाञ्चरेत् ॥
भृङ्गराज रसेनैव मर्द्दयेत्तु दिनत्रयम् ।
एकैक दिवसे तस्य एकैकां भक्षयेत्ततः ॥
एलानि करकञ्चैव कलां नागेश्वरन्तथा ।
मासैके व्याधिनाशश्च श्लीपदश्च चतुर्थके ॥
तथैव गलगण्डश्च कोषवृद्धिश्च नाशयेत् ।
बलपुष्टिप्रदं देवी पञ्चमासे कुञ्जरोपमः ॥
द्विमासे कान्तिवृद्धिश्च कुष्ठं हन्ति त्रिमासके ।
वृहस्पति समो विद्वान् सप्तमासे भविष्यति ॥
मम तुल्यो भवेद्योगी सम्वत्सरञ्च भक्षणात् ।

अथ मण्डूकपर्णीकल्प: ।

मण्डूकपर्णीं पुष्यार्के चोत्पाट्य च समूलिकाम् ।
प्रक्षालयित्वा तत: कुर्य्यात् सूक्ष्मचूर्णानि कारयेत् ॥
घृतभाण्डे तत: स्थाप्य यावत्पुष्यार्कवासरम् ।
विड़ालपदकै:स्तुल्यं काञ्चिकै:सह य: पिवेत् ॥
असाध्य सह दुग्धेन मासैके चर्म्मरोगहा ।
द्विमास भक्षणाद्देवि पलिते वर्ज्जयेत्तथा ॥

अथ पुनर्नवा कल्प: ।

पुष्यार्के दिवसे सौम्ये प्रात: श्वेतपुनर्नवाम् ।
समूलपत्रां सगृह्य सूक्ष्मचूर्णाणि कारयेत् ॥
मर्द्दयित्वा तत: पश्चात् घृतेन मधुना सह ।
भाण्डेन स्थापयेद्व यत्ने यथा रक्षाकरस्तथा ॥
ततो मासान्तरे देवि चम्पकं कुसुमा प्रभम् ।
वसन्त समये तस्य शुचिर्भुत्वा समाहित: ॥
नासमेकं भवेत् सत्यं मलमूलं सगन्धिकम् ।
अलिपक्ष्मोपमाकेशा गौरदेहा भवेत्तदा ॥
वृहस्पति सम वाग्मी जीवेत् पञ्चशताब्दिकम् ।
नास्ति तुल्य समं कल्प कथितश्च पुनर्नवाम् ॥
स्थिरवायुर्भवेद्देहे सेवनात् कल्पमुत्तमम् ।

ईश्वर उवाच ।

शृणु देवि प्रवक्ष्यामि निर्गुण्डी कल्पमुत्तम: ।
धनधान्यकरी देवि आयुरारोग्यवर्द्धिनी ॥
शान्ति पुष्टिकरी नित्यं साक्षाद्देवि स्वरूपिणी ।
निर्गुण्डीति समाख्याता सर्व्वलोक सुखप्रदम् ॥
तस्मादहं प्रवक्ष्यामि प्रयोगं शृणु सुन्दरि ।

निर्गुण्डी कल्पः ।

निर्गुण्डीमूलमुद्धृत्य शोभनेन दिने नतु ॥
अष्टादशपलं चूर्णं पलद्वादश सर्पिषम् ।
मधु षोड़शपलञ्चैव मिश्रीकृत्य विधानतः ॥
एभिस्तु स्निग्धभाण्डे च मासमेकन्तु सर्व्वतः ।
स्थापयेत् धान्यराशौ च मासादूर्द्ध्वं समुद्धरेत् ॥
समभ्यर्च्चेत्र गुरुं देवं पूजयेच्च विधानतः ।
ब्रह्माणीश्च कुमारीश्च भोजयेच्च यथाविधि ॥
तासामादाय चादेशं शुचिर्भूत्वा शुभे दिने ।
विद्धालपदमानन्तु भक्षयेच्च विधानतः ॥
अहन्यहनि भोक्तव्य मिदं भवति लक्षणम् ।
स्वप्नेनैर्वा स्वगात्रश्च भवेद्वलितः मेवच ॥
वर्ज्जेद्वलिपलित दीर्घजीवी भवेद् ध्रुवम् ।
भवति चाक्षयं रेतः स्त्रीशतरमितुं क्षमः ॥
प्रकामं भोजनं तस्य ततस्तापैर्नबाध्यते ।
आहारं मैथुनं निद्रां स्वेच्छया च करोत्यसौ ।
विकाराम्मनसः सम्यग्वर्द्धते दृश्यते नरः ।
प्रस्थं निर्गुण्डीचूर्णस्य गोमूत्रेण समं पिवेत् ॥
दशरात्रप्रयोगेन कुष्ठनष्ट प्रधानकम् ।
नाशयेच्च सदा देवि वायोर्मेघमिवाम्बरे ॥
निर्गुण्डी श्वेत तच्चूर्णं अजामूत्रेण यः पिवेत् ।
नखकेशास्तथादन्ताः सप्ताहेन पतन्ति वै ॥
द्विसप्ताह प्रयोगेन योगसिद्धि भवेद् ध्रुवम् ।
त्रिसप्ताह प्रयोगेन दृढं भवति लक्षणम् ॥
अथाग्नौ दाह्यते देवि न जले म्रियतेपि च ।

तस्य देहेन लौहस्य काञ्चनस्य न विन्दति ॥
चतुःसप्ताह योगेन भूमित्यक्त्वा नभो व्रजेत् ।
निर्गुण्डी चूर्णमादाय घृतेन सह भक्षयेत् ॥
क्षयस्तु दूर्व्वलो वापि बलवीर्य्यं भवेद् ध्रुवम् ।
निर्गुण्डी चूर्णमादाय पिवेदुष्णेन वारिना ॥
सप्तरात्र प्रयोगेन किन्नरैः सह गीयते ।
निर्गुण्डी मूलमुद्धृत्य गृहे च धारयेद्बुधः ॥
नश्यन्ति सर्व्वविघ्नानि गृहे नागाश्च सर्व्वशः ।

अथ भक्षण मन्त्रम् ।

प्रणवञ्च ततो मायां कूर्च्चवीजं फड़ान्तकम् ।
वह्निजायान्त मन्त्रेण शतधा चौषधोपरि ॥
जप्त्वा तु भक्षयेद्देवि कल्पोक्तस्य फलं भवेत् ।

ओं क्रीं हुं फट् स्वाहा ।

मन्त्रोस्तु ।

( ओं क्रीं हुं फट् स्वाहा )

तारं मायाद्वयं कूर्च्चं फड़ान्तं वह्नि सुन्दरि ।
अष्टोत्तरशतं जप्त्वा औषधं भक्षयेत् सुधी ॥

मन्त्रम् ।

ओं ह्रीं ह्रीं ह्रीं फट् स्वाहा ।

ओं नमो नामरूपाय पादपाय कुवेराय च ।
वह्निजायान्त मन्त्रेण औषधं भक्षयेत्ततः ॥
औषधं भक्षयेद्देवं सपुष्टिकोदनं नराम् ।
त्यक्त्वा क्षाराम्लादिकं तिरात्राभ्यन्तरे ततः ॥
औषधं भक्षयेद्देवि यथोक्त फलमाप्नुयात् ।
यावदौषधं भक्षयेत्तावत् क्षारादिकं तथा ॥
लवणञ्चैवशाकादि वातातपादिकं त्यजेत् ।

अथ हस्तिकर्ण कल्पः ।

एवमन्यं प्रवक्ष्यामि प्रयोगं शृणु सुन्दरि ।
औषधं दिव्यरूपञ्च स्वाज्ञा पूर्व्वं समुद्गतम् ॥
हस्तिकर्ण इति ख्यातो नाम्नासो सुरपूजितः ।
तस्य भक्षणमात्रेण सर्व्वरोगात् प्रमुच्यते ॥
मृगेन्द्रञ्च यथा दृष्ट्वा मृगा यान्ति पराङ्मुखम् ।
एवमत्रौषधं प्राप्य व्याधिमात्रं प्रणश्यति ॥
सुतिथौ च सुनक्षत्रे सुदिने च सुपूजिते ।
सुपुष्पै रक्षितैरर्घ्यं दत्त्वा चैवोत्तरामुखः ॥
खनेत सुमनसा प्राज्ञः समुद्धृत्य तु धारयेत् ।
ततः पिष्ट्वा सुसंस्कृत्य श्लक्ष्ण चूर्णानि कारयेत् ॥
सर्पिर्म्मधुसमायुक्तं घृतभाण्डे निधापयेत् ।
एकविंशति रात्रेण समुद्धृत्य पलांशकम् ॥
ब्राह्मणं भोजयित्वा तु स्वस्तीति वाचयेत्ततः ।
दुग्धेन च समायुक्तम् अहन्यहनि भक्षयेत् ॥
पलं भक्षणमात्रेण वलीपलित वर्ज्जितः ।
श्रुतिधरो मधुरवाक् श्रीमाने वामरोपमः ॥
बलवीर्य्यधरो दक्षो नरो नारायणोपमः ।
दिने न योजनशतं गत्वा च पुनरात्रजेत् ॥
जीवेद्वर्षशतञ्चैव नात्र कार्य्या विचारणा ।
प्रयोगान्यं प्रवक्ष्यामि शृणुष्व कमलानने ॥
कृष्णाधेनुक्षीरे नैव संलोड्य भक्षयेद् यदि ।
पूर्व्वोक्त फलमाप्नोति सत्यं सत्यं न संशयः ॥
एवं माहिषदुग्धेन संलोड्य मधुना सह ।
भुक्त्वा फलं पूर्व्ववच्च लभते नवमासके ॥

दध्ना च भक्षणाद्देवि मासत्रयं प्रयत्नतः ।
पूर्व्ववत् फलमाप्नोति न केशा सिततां व्रजेत् ॥
सर्व्वत्र जयमाप्नोति वशीकरणमुत्तमम् ।
जीवेद्वर्षशत द्वे च नरो नागबलोपमः ॥
तथा शयनकाले च उदकेन घृतेन वा ।
विड़ालपदमानन्तु देहसिद्धिर्भवेद् ध्रुवम् ॥
यथेच्छया पलशतं भुक्त्वा जरामरो भवेत् ।
कल्पेदं परमं गोप्यं तव स्नेहात् प्रकाशितम् ॥
यस्य सेवनमात्रेण नरो मोक्षमवाप्नुयात् ।

अथ श्वेतार्क कल्पः ।

अथेदानीं प्रवक्ष्यामि श्वेतार्ककल्पमुत्तमम् ।
अस्य माहात्म्यविस्तारं शृणुष्व कमलानने ॥
श्वेतार्कमूलमुद्धृत्य चूर्णं कृत्वा प्रयत्नतः ।
आदौ सूर्य्यं नमस्कृत्वा विधिवत् पूजयेत्ततः ॥
प्रातरुत्थाय जीर्णान्ते गवाक्षीरेण संपिवेत् ।
भवेत् श्रुतिधरो धीरो वलीपलित वर्ज्जितः ॥
कामदेवस्य सदृशः सर्व्वशास्त्रविशारदः ।
मासमात्रं प्रयोगेन जीवेद्वर्षशतं नरः ॥
सर्व्वरोगविनिर्म्मुक्तो नरो नागबलोपमः ।
श्वेतार्कमूलकं हस्ते बद्धा देशान्तरं व्रजेत् ॥
भूतः [illegible]ाः पिशाचाद्या डाकिन्या गुह्यकास्तथा ।
दृष्टिम[illegible]ात् पलायन्ते श्वेतार्कस्य प्रसादतः ॥
श्वेता[illegible]रोचनया गोघृतेन च पेषयेत् ।
ललाटे [illegible]कं कृत्वा त्रैलोक्यं वशमानयेत् ।
श्वेतार्क[illegible]लेनैव चन्दनं सह पेषयेत् ।

एतद्वराङ्के हत्वा किन्नरी भवति ध्रुवम् ॥
श्वेतार्कमूलं कट्यौ बद्धा रमणीं वै रमेद्बुधः ।
धारयेत् पतितं शुक्रं स्त्रियश्च वमशानयेत् ॥
श्वेतार्कं पद्मपत्रञ्च कट्यौ बद्धा रमेत् स्त्रियम् ।
धारयेच्च नरः शुक्रः शतनारीं रमेद् यदि ॥
श्वेतार्कमूलमानीय स्वरेतं सह पेषयेत् ।
तिलकं कारयेद् यस्तु तस्य विश्वं वशम्भवेत् ॥
स्वरसं मधुसंयुक्तं श्वेतार्कं तुलया सह ।
यावत् प्रज्वलते दीपं तावत् शुक्रञ्च न स्वरेत् ॥
नाभिपद्मदले बद्धा तन्मूलं दक्षिण करे ।
धारयेच्च सदा देवी सौभाग्यं परमं भवेत् ॥
श्वेतार्ककल्पमाहात्म्यं तव स्नेहात् प्रकाशितम् ।
न वक्तव्यं कामुकाय शठाय न कदाचनम् ।

अथ भृङ्गराज कल्पः ।

अथेदानी प्रवक्ष्यामि भृङ्गराजकल्पमुत्तमम् ।
भृङ्गराज मूल पत्रं चूर्णयित्वा तु यत्नतः ॥
काञ्जिकैः पेषयेत् धीरः वटीं कुर्य्यात् प्रयत्नतः ।
सन्निवेत् सह यत्नेन सासैके च गुणं भवेत् ॥
भृङ्गराजपत्ररसं कृष्णक्षीर समं पिवेत् ।
तैलेन सह संदद्यात् वलीपलितवर्ज्जितः ॥
भृङ्गराजरसञ्चैव गुडक्षीरससंयुतः ।
मासमात्र प्रयोगेन सर्व्वव्याधि विनश्यति ॥

अथ काकला कल्पः ।

काकलाकल्पं प्रवक्ष्यामि शृणुष्व कमलानने ।
काकलापाद प्रहारेण नाभिर्व्यथा विनश्यति ॥
काकलामूलं करे बद्धा अतीसारं विनश्यति ।

अथ अम्लालोनी कल्पः ।

अथाम्लालोनीकल्पञ्च कथयामि वरानने ।
अम्लालोनीरसं दत्त्वा चक्षुम्मूलं विनाशयेत् ॥
अतीसारं नाभिम्मूलं चक्षुम्मूलं तथैव च ।
अम्लालोनी साचीमूलं मरिचं कुष्ठमेव च ॥
पेषयित्वा पिवेत् यस्तु वसन्त स्नाम्व नाशयेत् ॥

अथ शाल्मली कल्पः ।

शृणु देवी प्रवक्ष्यामि शाल्मलीकल्पमुत्तमः ।
श्वेता पीता तथा रक्ता कृष्णाश्वेति चतुर्व्विधाः ॥
ब्राह्मणी श्वेतवर्णा च पीतवर्णा च वाङ्गनाः ।
रक्ता चैव भवेद्वैश्याः कृष्णाश्शूद्राः प्रकीर्त्तिताः ॥
चतुर्व्वर्णमयी देवी सर्व्वभूतानुप्रकल्पिनी ।
श्वेता पीता तथा कृष्णा न हि सर्व्वत्र लभ्यते ॥
रक्ता न कथयिष्यामि या च सर्व्वत्र लभ्यते ॥
तस्या पुष्परसं लब्धा वह्नियोगेन साधितम् ।
सुमुहूर्त्ते च कर्त्तव्यं ज्ञात्वा चन्द्रवलावलम् ।
पलद्वयं पिवेत् प्राज्ञ एकचित्त समाहितः ॥
रजनी प्रहरैकेन उन्मादो जायते ध्रुवम् ।
अष्टो स्त्रियाः कामयते स्वेच्छया परिवृंहितः ॥
एकद्वित्रिचतुःपञ्चषट् सप्तमाष्टमं रमेत् ।
प्रथमे द्वि पले देवी चत्वारि च द्वितीयके ॥
तृतीये षट् पलान्येव पलान्यष्टौ चतुर्थके ।
प्रतियामं पिवेत् क्षीरं रमेच्च योषितस्तथा ॥
अनेनैव विधानेन नरसिद्धिमवाप्नुयात् ।
चतुर्व्वर्षशतं देवि नरो जीवेन्न संशयः ॥

नरो नागबलोपेतः कामदेव समो भवेत् ।
नारीणां सम्मतो नित्यं सुभगः प्रियदर्शनः ॥
शीघ्रगामी भवच्चैव वलीपलित वर्ज्जितः ॥

अभयाकल्पः ।

अथातः संप्रवक्ष्यामि अभया कल्पमुत्तमम् ।
भक्षयेत् ऋतुभेदेन देवतुल्या भवेन्नरः ॥
शरते च शिता युक्ता हेमन्ते नागरेण च ।
शिशिरे पिप्पलीयुक्ता वसन्ते मधुना सह ॥
ग्रीष्मे च गुड़संयुक्ता वर्षासु लवणेन च ।
अनेनैव विधानेन भक्षयेद् यो हरीतकी ॥
तस्य वृद्धिर्ब्बलं वीर्य्यमारोग्य स्थिरयौवनम् ।
अग्निर्दहति काष्ठानि शरीरस्य हरीतकी ॥
कदाचित् कुप्यते माता नोदरस्था हरीतकी ।
मातेव भक्षयेद् यो हि हितकारी हरीतकी ॥

अथ औषधभक्षणे नक्षत्रनियमः ।

अथातः संप्रवक्ष्यामि नक्षत्रौषधभक्षणे ।
ये च ऋक्षाणि शस्तानि नराणामौषधभक्षणे ॥
मृगो हस्ता ज्येष्ठा मूला विशाखाश्चानुराधिका ।
धनिष्ठा शतभिषा चैव भैषज्य भक्षणे शुभा ॥

देव्युवाच ।

ईड़ा च पिङ्गला चैव सुषुम्ना च तृतीयका ।
योगीनां कार्य्य सिद्धार्थे नाड़ीत्रयं प्रशस्यते ।
केनोपायेन देवेश प्रकाश्यन्ते च नाभयः ॥

ईश्वर उवाच ।

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
मेरोर्वामे स्थिता ईड़ा शीतला चन्द्ररूपिणी ॥

इते प्रकाशिता सा च तस्मात् इतस्त्र संपिबेत् ।
दक्षिणे पिङ्गला नाड़ी दिवाकर सम प्रभा ॥
उग्रवीर्य्या च सा नाड़ी मधुना सा प्रकाशते ।
मेरोर्मध्ये सुषुम्ना च केवलानन्दरूपिणी ॥
मिष्टदाड़िमरसेनैव सुषुम्ना च प्रकाशिता ।
काश्मीरोद्भव दाड़िमा मिष्टदाड़िम उच्यते ॥

अथ ज्वरचिकित्सा ।

अथात: संप्रवक्ष्यामि चिकित्सा ज्वरसम्भवे ।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं वाथ द्वन्द्वजे ॥
केशराजस्य मूलञ्च क्षिप्ता तत्समखण्डकम् ।
आर्द्रकै: सहभक्षेत् महाज्वरविनाशनम् ॥
नागरं गुडूचीञ्चैव धन्याकम् रक्तचन्दनम् ।
उशीरञ्चैव प्रत्येकं क्वाथ्य पञ्चसमन्वितम् ॥
चतुर्भागैक शेषन्तु तद्वारिस्थित शेषकम् ।
कम्पनं वेदानां तीव्रं ज्वरं नश्यन्ति वातिकम् ॥
अपामार्गजटा कट्यां सप्त लोहित तन्तुभि: ।
बद्धा हरेत् रवेर्वारे ज्वरं हन्ति तृतीयकम् ॥
गुग्गुलुकपुच्छाभ्यां धूपिते मानुषो भवेत् ।
चातुर्थकं ज्वरं हन्ति तथावस्य विशुध्यत: ॥
जम्बुफलं हरिद्रा च सर्षपञ्चैव तु नासुकम् ।
सर्व्वज्वराणां धूपोऽयं कर्त्ता रात्र्यन्धकस्य च ॥

अथ ज्वरनाशन मन्त्रा: ।

अथ मन्त्रप्रकारेण ज्वरनाशन्तिं शृणुष्व मे ॥
( ओं नमो भगवते छिन्धि छिन्धि ज्वरकस्य
शिर प्रज्ज्वलित मधुपाशे पुरषाय फट् । )

मन्त्रेणानेन देवेशि भूमाङ्गं छेदनञ्चरेत्।
ततो महाज्वरं देवि विनाशं भवति प्रिये॥
देवकाष्ठं गुडूचीञ्च धन्याकं रक्तचन्दनम्।
कम्पनं वेदनां तीव्रं ज्वरं नश्यन्तु वातिकम्॥
करे बद्धन्तु निर्गुण्ड्या मूलं ज्वरहरं ततः।
हस्ते रक्तपलाशस्य अपामार्गस्य वा प्रिये॥
मूलं सर्व्वज्वरहरं भूतप्रेतादि सम्भवम्।
सहदेवा धृता कर्णे लाङ्गलीमूलकं गले॥
वृहस्पतिमूलकं वापि मूलं वाड़ियालकम्।
बद्धशिरसि सूत्रेण महाज्वर विनाशनम्॥
रविवारे समुत्पाट्य चापामार्गस्य मूलकम्।
सप्तसूत्रैः करे बद्धानि ते ज्वर हरन्ततः॥
समभागं द्रवञ्चैव आर्द्रकं वासकं मधु।
ऐकाहिकं ज्वरं हन्ति भक्षयित्वा दिनत्रयम्॥
अथाभिमन्त्रयेद्देवि शुष्कलाङ्गलमृत्तिका।
तिलकं तत् प्रभातेन शय्यायां कारयेन्नरः॥
ऐकाह्निकं ज्वरं तीव्रं नाशयेद्रविवासरे।

ओं नमो भगवते छिन्धि छिन्धि अमुकस्य शिरः प्रज्वल परायण पुरुषाय फट्।

यदा सरस्वती तीरे अपुत्रा तापसी मृता।
तस्यैव तिलकं दद्यान्मुक्त चैकाहिको ज्वरः॥
इति मूषिकगर्त्ते वीरणपत्रे कश्यपस्य
अवापुष्पे तिलजलेन तर्पणम्।

अथ छेदमन्त्रः।

ओं वाणयुक्ते महाघोरे द्वादशार्क सम प्रभे।
जातोऽसौच महावीर्य्यां नुश्यत्वैकाहिकोज्वरः॥

विलिखेद्भूर्जपत्रेण बाहोर्मन्त्रञ्च धारयेत् ।
ऐकाहिकं ज्वरं हन्ति पुरुषो दक्षिणे क्रमात् ॥
समुद्रस्योत्तरे तीरे द्विविदो नाम वानरः ।
ज्वरमैकाहिकं हन्ति लिखिते च घटोदरे ॥
देवदारुक धन्याकं नागरं वृहतीद्वयम् ।
दद्यात् पाचनकं पूर्व्वं सान्निपातज्वरापहम् ॥
प्रभातसमये देवि मण्डं गोमूत्रसम्भवैः ।
पिवेत्तदर्द्धभागेन सन्निपातज्वरापहम् ॥
शेफालिकात्वचं पुष्पं अश्विन्यां वटिकाकृता ।
अजारोमेन बध्नीयात् सन्निपातज्वरापहा ॥

अथ बहुमूत्र चिकित्सा ।

अथातः संप्रवक्ष्यामि चिकित्सा बहुमूत्रकम् ।
सेवयेदौषधं यत्नात् साध्यं भवति नान्यथा ॥
धात्रीरसस्य स्वरसं मधुना च पिवेत् सदा ।
बहुमूत्रक्षयं देवि क्षारस्य वासकस्य वा ॥

अथ मूत्रकृच्छ्र चिकित्सा ।

अजाजीम्लक्षीरन्तु दधिमण्डन्तु पाययेत् ।
लवणेन समायुक्तं मूत्रकृच्छ्र निवारणम् ॥
यवक्षारं सितायुक्तं मूत्रकृच्छ्र निवारणम् ।
स्वर्णशेफालिकामूलं मधुना यत् पिवेद्बुधः ॥
मूत्रकृच्छ्रं निहन्त्याशु सत्यं सत्यं न संशयः ।
पीतसारं गुडूच्यास्तु मधुना मेहनाशनम् ।
सर्व्वमेहहरो धात्र्यारसः क्षौद्रनिशाकरैः ॥

अथ विन्दुक्षय चिकित्सा ।

घृतकुमारिकां पिष्ट्वा क्षीरेण यः पिवेन्नरः ।
विन्दुमात्रं क्षयं देवि धात्रीञ्च विल्वपत्रकम् ॥

धात्रीं हरीतकीञ्चैव कृष्णजीरक संयुतम् ।
भक्षयेत् शयने काले बिन्दुस्रावक्षयो भवेत् ॥
यदा बद्धो भवेत् वीर्य्यं चरणौ लेपयेत्तथा ।
केतकीपुष्पमादाय दाड़िमा वचमूलकम् ॥
कृष्णा गोभवदुग्धञ्च भक्षयेत् ऋतुवासरे ।
बिन्दुस्रावक्षयं कुर्य्यात् बिल्वधुस्तूरार्कमूलके ।
अश्विन्यां वटिकां कृत्वा भक्षणान्नात्र संशयः ॥

अथ कुरण्ड चिकित्सा ।

वाड़वाल्यराज्यञ्च पिष्ट्वा तच्चार्द्रकैः सह ।
कुरण्डं नाशयेत् भद्रे लेपनान्नात्र संशयः ॥
अन्नानसेन मण्डूकं मण्डूकरक्तमांसकैः ।
कोषवृद्धिक्षयं कुर्य्यात् तैलेन बाहुलेपनात् ॥
घृतैर्नीलोत्पलं पिष्ट्वा लेपनाच्च कुरण्डहा ।
अथवा रक्तमण्डूकशोषितैर्लेपनात्तथा ॥
कृष्णजीरक शुण्ठी च पिप्पली मरिचन्तथा ।
एषकोषरसोऽनेन कारञ्जमधुसंयुतम् ॥

अथ कुरण्डगलगण्ड चिकित्सा ।

अश्वगन्धास्तु मूलन्तु पिष्ट्वा तण्डुलवारिणा ।
सप्ताहे च हरेल्लेपात् कुरण्डगलगण्डयोः ॥

अथ भगन्दर चिकित्सा ।

दाड़िममूलं हरिद्रा च केतकीं तस्य लेपनात् ।
भगन्दरं विनाशः स्यादयं योगो विधानतः ॥

अथ कामला चिकित्सा ।

घोषाफलघात सम[illegible] ध्रुवम् ।
अथवा नावनं कुर्य्यात् कुष्माण्डबीजं विभागतम् ॥
दृष्टश्च विनि[illegible]कामलान्मुच्यते नरः ॥

अथ वैवर्ण्यचिकित्सा ।

कृष्णतिलैः ससिद्धार्थैस्तथैव कृष्णजीरकाः ।
समभागेन पिष्ट्वा वै वैवर्ण्यं मर्द्दनाद्धरेत् ॥

अथ कासचिकित्सा ।

त्रिफला त्रिकटुश्चैव समभागेन चूर्णितम् ।
मधुना सह सम्पानात् कण्ठकासं विनश्यति ॥
घृतेन पचयेन्मूलं पत्रञ्च बालकस्य च ।
भक्षेद्दिनत्रयं यावत् श्वासकासक्षयं भवेत् ॥
पिप्पली देवदारुश्च शुण्ठीचूर्णं समन्तु वै ।
ऊर्द्ध्वश्वासं तदा हन्ति पिबेदुष्णजलेन वै ॥

अथ क्षयकास चिकित्सा ।

नागकेशरमूलञ्च मधुना सह संपिवेत् ।
वासकस्य चमूलं वाथ्यञ्जलैः क्षयरोगहा ॥
अशोकस्य च मूलानि अजाक्षीरेण भक्षयेत् ।
क्षयरोगक्षयं कुर्य्यान्मूलं जीवेश्वरी मधु ॥
गवेधुकस्य मूलं वा भक्षणे मधुना सह ।
पिप्पलीमूलकं वापि दुग्धेन क्षयरोगहा ॥




अथ नासार्श चिकित्सा ।

दूर्व्वादाड़िमपुष्पे च आम्रातक हरीतकी ।
सर्व्वंसंपेषयेद्योसौ नासारक्तस्रावपहा ॥

अथ गुदार्श चिकित्सा ।

पिप्पलीश्च हरिद्राश्च गोमूत्रेण समन्विताम् ।
प्रलेपश्च गुदद्वारे अर्शांसि विनिवारयेत् ॥
अभया नवनीतश्च शर्करा पिप्पलीयुतम् ।
प्राशनादर्शोहरत्याशु नात्र कार्य्या विचारणा ॥



अथ कर्णशूल चिकित्सा ।

तीव्रशूलान्तरे कर्णे सशब्दक्लेदवर्द्धिनि ।
शूलोन्मुक्तं क्षिपेत् कोष्ठं सैन्धवेनावचूर्णितम् ॥
अर्कपत्रं गृहीत्वा तु मन्दाग्नौ तापयेच्छनैः ।
निष्पिड्य पूरयेत् कर्णे कर्णशूलं विनश्यति ॥
शतावरी तण्डुलीयं मधुना कर्णपूरयेत् ।
कर्णशूलं तदा हन्ति परं योग वदामि ते ॥
शतावरी तण्डुलीयं मधुना कर्णपूरणे ।
कर्णशूलं नाशयन्ति समुदिदं वदामि ते ॥

अथ चक्षुरोग चिकित्सा ।

निम्बपत्रं रसं शुण्ठि समेतं चक्षुपूरणात् ।
चक्षुशूलं क्षयं यान्ति तक्रबदरमूलकैः ॥
काकस्य रक्तपित्तञ्च भिक्षुकस्य च चक्षुसी ।
यत्नवान् साधकः श्रेष्ठो गृहीत्वैकत्र कारयेत् ॥
शुभे दिने च सन्ध्यायां चक्षुर्मध्ये प्रदापयेत् ।
अन्धकारेऽपि देवेशि दिव्यदृष्टि प्रजायते ॥
हस्तिशुण्ड्या रसेनैव चक्षुश्च पूरयेद्बुधः ।
चक्षुजं हन्यते रोगं निश्चितं शृणु पार्वति ॥

अथ शिरोरोग चिकित्सा ।

विड़ङ्गं गन्धकञ्चैव नीलोत्पलं तथैवच ।
गोमूत्रं कटुतैलञ्च दत्त्वा पाकं समाचरेत् ॥
शिवप्राण पानाद्देवि शिरोरोगं विनाशयेत् ।
दुग्धैः कृष्णतिलं पिष्ट्वा लेपं दद्याच्छिरोपरि ।
शिरोव्यथां क्षयं याति गुडूचीमूलकेन वा ॥

अथ पन्नगस्य चिकित्सा ।

हरिद्रा लवणञ्चैव मरिचं श्वेतसर्षपम् ।
एकीकृत्वा पेषयित्वा मुखे संधृत्य चर्व्वयेत् ॥

अथ दन्तरोग चिकित्सा ।

केशराजस्य मूलस्य आर्द्रकैः सह धारयेत् ।
तदा न पतते दन्तौ नचेत् ओड़स्य मूलकम् ॥
अर्कपत्रस्य तप्तेन,दन्ते स्वेदश्च कारयेत् ।
तदा न पतते दन्तौ बकुलत्वक् चर्व्वणात् ॥
जातीपत्र पुनर्नवा तिलकणाकोदन्त कुष्ठं वचा ।
शुण्ठीदीपहरीतकी समकृतं चूर्णं मुखे धारितम् ॥
वातघ्नं क्रिमिकण्डुमूलशमनं सर्व्वमयं ध्वंसकृद्-
दुर्गन्धादि समस्तदोषशमनं दन्तस्तु वज्रायते ॥

अथातीसार चिकित्सा ।

अथातीसाररक्तातीसारयोः प्रयोगं शृणु ।
स्वल्पं प्रयोगमात्रेण रोगात् प्रमुच्यते यतः ॥
मूलानि सहदेवायाः कृत्वा च सप्तखण्डकम् ।
रक्तसूत्रैः कट्यौ बद्धा सर्व्वातीसारनाशनम् ॥
तालमूलीञ्च मधुना समभागेन यः पिबेत् ।
रक्तातीसार क्षयकृन्नारिकेल जलं पिबेत् ॥

अथ परिणामशूल चिकित्सा ।

चिञ्चलो वकुलत्वचां पिष्टाच क्वाथितोदकैः ।
परिणामस्य शूलस्य कथितं परिवर्द्धनम् ॥
लौहचूर्णं समायुक्तं त्रिफलाचूर्णमेव च ।
मधुनास्वादितं देवी नामाख्य शूलनाशनम् ॥
रक्तोत्पलमपामार्ग शोभाञ्जन वच तथा ।
लवणञ्च समं भक्षेत् नामशूलं विनश्यति ॥

अगस्त्यङ्गमग्निदग्धां गव्या आज्यसमन्वितम् ।
पीतं कल्पृष्ठमूलानां भवेन्नाशकरं प्रिये ॥

अथ विचर्च्चिका चिकित्सा ।

एरण्ड मूलकं पत्रं भृङ्गराजरसन्तथा ।
अनथा काञ्जिकां घृष्ट्वा लेपा विचर्च्चिकापहा ॥

अथ कुष्ठरोग चिकित्सा ।

श्वेताकृष्णापराजितामूलं पिष्ट्वा लेपश्च कुष्ठता ।
अथवा पारिभद्रस्य मूलं मासैः वटिं कृतम् ॥
तैलेन पाचितं तेषां भक्षणात् कुष्ठनाशनम् ।
घृतैरक्षोदकैर्वापि सर्व्वं कुष्ठं विनाशनम् ॥
विश्वनिम्बदलानाञ्च चूर्णमामलकैः सह ।
प्रत्यहं भक्षयेत् यस्तु तस्य कुष्ठं विनश्यति ॥
सोमराजस्य बीजानि नवनीतानि मेलयेत् ।
मधुनास्वादिता निस्तु तानि कुष्ठहरानि वै ॥
कुशा हरीतकी दूर्व्वा तण्डुलश्चार्क क्षीरकम् ।
कदलीवन्दनं शुष्क क्षारं कृत्वा तु लेपनम् ॥
श्वेतकुष्ठं क्षयं कुर्य्यात् शाचिशाकस्य मूलकम् ।
त्रिभागं त्रिकटुं निम्बं गुडूची च हरीतकी ।
भाग एक जलं पिष्ट्वा सर्व्वकुष्ठस्य नाशनम् ॥

अथ शोषारोग चिकित्सा ।

चित्रकं मूलकं पिष्ट्वा कृत्वा तु वटिकात्रयम् ।
कदली पक्वमध्येतु भक्षणात् शोषानाशनम् ॥

अथ पिस्फोटक चिकित्सा ।

पिष्ट्वा कृष्णातिलश्चैव काञ्जिकैः पाचयेत्ततः ।
तल्लेपे प्रयाणा भद्रे शोथश्च वारयेत्ततः ॥

समभागोदकैः पृष्ट्वा मरिचं रक्तचन्दनम् ।
दद्यादारम्भके पूर्व्वं विस्फोटव्रण नाशनम् ॥
महानस्य मूलस्य पिष्ट्वालोड्य जलेमुदा ।
गण्डशोथ क्षयं याति विस्फोटस्य तथैव च ॥

अथ अर्व्वुदरोग चिकित्सा ।

भूमिकुष्माण्डमूलस्य पिष्ट्वालोड्य जलेन तु ।
पाचयेदुष्टफेणस्य लेपादर्व्वुद नाशनम् ॥

अथ दग्धव्रण चिकित्सा ।

तिलतैलेर्यवान्दग्धा समं कृत्वा तु मिलयेत् ।
तेनैव लेपनात्तूर्णं अग्निदाहं सुखीभवेत् ॥
तिलस्यैवाग्निना दग्धा सर्व्वे भस्म समन्वितम् ।
अग्निदग्धव्रणं नश्येदनेनैवाप लेपनात् ॥

अथ श्लीपद ( गोद ) चिकित्सा ।

अर्कमूलं समुत्पाद्य उत्तरे चार्कवासरे ।
तन्मूलं रक्तसूत्रेण धारणात् श्लीपदक्षये ॥
वला चातिवला लोध्र लेपनात् श्लीपदक्षयः ।
मूलं दण्डोत्पलं वापि हरितालेन लेपयेत् ॥
निर्गुण्डीकेरण्ड सुवर्ण यलेश्यपाहमिनैः ।
श्वेतसर्षपैश्च पिष्ट्वा तु लेपेद्रक्तमञ्जनाच ।
चिरोत्थितं श्लीपदस्य निहन्ति निश्चितं सदा ॥

अथ निद्रामोक्षोपायः ।

शृङ्गं माहिष कुष्माण्डं पिष्ट्वा तत्समभागकम् ।
लेपयेत् कुक्षि पृष्ठे च यस्य निद्राक्षयो भवेत् ॥
श्रोभाञ्जनस्य बीजानि नीलोत्पलस्य पुष्पकम् ।
नागेश्वरं समं पिष्ट्वा निद्रायुक्ति चाञ्जनात् ॥

बृहतीफलपत्रञ्च पिष्ट्वा च मधुयष्टिभिः ।
यस्य निद्राञ्जनं दद्यात् ध्रुवं निद्रा विनाशयेत् ॥

अथ निद्रा चिकित्सा ।

मूलकं काकजङ्घायां धारयेत् शिरसोपरि ।
मन्त्रेनैवान्वितं येषां भवेन्निद्रा बलीयसी ।

मन्त्रो यथा ।

ओं सिद्धे सिद्धे योगिनी महानिद्रे स्वाहा ।
महानिद्रायनीं देवीं मन्त्रेणानेन पूजयेत् ॥
तेनैव गृहमध्ये च मन्त्रं शत एवं जपेत् ।
महानिद्रायनी भूत्वा सर्व्वे स्वप्नयिता जनाः ॥
श्मशानदं क्षिपेद्गेह कृष्णा गोमूत्र मृत्तिका ।
एवं निद्रामयी माया संक्षेपात् कथितं मया ॥
अथावान्यं प्रकारेण निद्रानी मन्त्र कथ्यते ।
यस्योच्चारणमात्रेण निद्रां भवति चान्यथा ॥

अथ अदृश्योपायः ।

दण्डकाकस्य रुधिरं पित्तञ्च जम्बूकस्य च ।
भल्लूकपेचकयोरस्थि वामदक्षिणयोरपि ॥
एषां पिष्ट्वा समञ्चैव वटिकां कारयेत्ततः ।
छायायां कारयेच्छुष्कां मञ्जनं तत्प्रदापयेत् ॥
यावन्मात्रं स्थितं नेत्रे अदृश्योभव सुन्दरी ।
पादयोस्तनयोरेवं युक्तिमौच्यं मनीषिभिः ॥
चिताग्नि खञ्जरीटस्य विष्ठा फेणोष्टयस्य च ।
शोभाञ्जनं चासनेत्रे नर एतैश्च धूपितः ॥
अदृश्यैस्त्रिदशैः सर्व्वैः किं पुनर्मनुजैः प्रिये ।

अथ अदृश्य निधि दर्शनोपायः ।

कनकधुस्तूरमूलस्य तथा सप्तदलस्य च ।
मुक्तकेशेन चोत्पाद्य मूलस्यावत् वल्कलैः ॥
तावन्मुखे च संस्थाप्य सर्व्वमुदृश्यते, नरैः ।
पातालतलपर्य्यन्तं यत्र यत्र स्थिते निधिः ॥

अथ निगड़भङ्ग प्रयोगः ।

तत्र कालीसाधनम् । आदौ ध्यानम् ।

रक्तवस्त्रपरिधानां दिव्यगन्धानुलेपनां त्रिनयनां हास्य-वदनां चतुर्भुजां मणिमुकुटभूषितां शववाहनां मुण्डमालाविभू-षितां कर्त्रीखर्परधारिणीं मामुद्धर देवि कात्यायनि ॥ इति ध्यात्वा मन्त्रं पठेत् ।

कृष्णजयन्तीमूलस्य शनिमङ्गलवासरे ।
समुत्पाद्य गुवाकेन खादित्वा स्वदेहे स्वयम् ॥
दद्यात् फुत्कार देवेशि मन्त्रेणानेन साधकः ।
सिद्धिं कुर्य्यात् मनुं जप्त्वा चाष्टोत्तर सहस्रकम् ॥
कार्य्यसिद्धिं भवेत् सत्यं नात्र कार्य्या विचारणा ॥
ओं चामुण्डे वज्रपाणि ह्रीं फट् स्वाहा ।
अनेन सहस्रजपेन बन्धो मोक्षो भवेद् ध्रुवम् ॥
निगड़ं कपाटं देवि आवश्यं भञ्जनं शुभम् ।
छिनत्ति जालं दासस्य स्तम्भयेत्तैलयन्त्रकम् ॥
नश्येत् पाकं कुलालस्य गवां चीरस्य नाशनम् ।

अथ देह दुर्गन्ध हरणम् ।

तिलं सर्षपसंयुक्तं हरिद्रा मेथिकास्तथा ।
पिष्टा तल्लेपनात् गाढ़ं गात्रगन्धो विनश्यति ॥
आर्द्रकस्य च पुष्पा तुल्सीपत्रयुतानि च ।
कक्षोभाणि च तल्लेपात् देहदुर्गन्धमाहरेत् ॥

अथ देह सौगन्धजननम् ।

शुष्काम्रबीजं हरीतकीं सोन्धामामलकस्य च ।
उद्वर्त्तनं भक्षणान्ते देहसौगन्धवर्द्धनम् ॥
कुष्ठस्य चूर्णकं कृत्वा मधुसर्पि समन्वितम् ।
भक्षयेत् प्रातरुत्थाय पद्मगन्धं प्रजायते ॥

अथ कान्तिजननम् ।

अतसीमाषगोधूमं चूर्णं कृत्वा तु पिप्पलीम् ।
घृतेन लेपयेत् गात्रं एभिः सह विचक्षणः ॥
कन्दर्पसदृशो कान्ति भवेन्नित्यं विलेपनात् ।
धात्रीकुसुमानीय फलं तत्र च यो हृतम् ॥
जम्बुफलस्याम्लरसे मधुना सह पेषयेत् ।
वराङ्ग लेपनादेव दृष्ट्वा कान्तैव गच्छति ॥

अथ पुष्टिजननम् ।

धातकी सोमराज क्षीरेण सह पेषयेत् ।
दुर्व्वलत्वं भवेत् स्थूलो मात्र कार्य्या विचारणा ।

अथ मुखसौगन्धजननम् ।

यः कुष्ठचूर्णं मधुना घृतेन कक्कोलान्वितम् ।
मासैकमात्रेण याति केतकीकुसुमोपमम् ॥

अथ सुस्वरजननम् ।

हरिद्रा च वचा कुष्ठं पिप्पली च यमानिका ।
मरिचं सैन्धवं शुण्ठी एषां चूर्णस्तु कारयेत् ॥
मधुना सहितं चूर्णं पेषयित्वा शिलातले ।
दिनच सप्तभिश्चैव भक्षितश्च निरन्तरम् ।
जायते सुस्वरं पुंसां किन्नरैः सह गीयते ॥

अथ लोमपातनम् ।

हरीतालं कदलीदलभस्मना ।
एकयोगेन चोद्वर्त्य लोमपातनं भवेत् ॥

अथ केशस्य वैवर्ण्य हरणम् ।

मुस्तकं सर्षपञ्चैव उशीरञ्च तथैव च ।
हरीतकी नखी चैव आमलकी समन्ततः ॥
सर्व्वं समं परिहृत्य पेषयित्वा विधानतः ।
केशमूलं समालिप्य मेपतुल्यो भवेद् ध्रुवम् ॥

अथ स्तनगुणाधानम् ।

स्वाविगीरसक्वाथ्यं तैलं सिद्धतिलोद्भवम् ।
तत्तैलं तिलकेनापि स्तनस्योपरि लेपयेत् ॥
काठिन्यं दृढतां याति पतिताश्चोत्थितं भवेत् ।
वृद्धो वा कन्यका वापि जातौ यस्याः पयोधरौ ॥
श्वेतोद्भवस्य कुसुमं कृष्णधेनुपयोन्वितम् ।
पिष्ट्वा स्तनयुगे दद्याद्भवेत् पीनपयोधरम् ॥
वचाश्वगन्धासंयुक्ता अश्वारिपल्लवकन्तथा ।
गजपिप्पलीकायुक्तं सद्यो भिन्न जलेन च ॥
पेषयित्वा विधानेन लेपयेत् स्तनमण्डले ।
पततेन्तु कदाचित्तु आमतालफलं यथा ॥
रसं गाम्भारीपत्रस्य तत्समं तिलतैलकम् ।
समानं जल भागञ्च दत्त्वा पाकं समाचरेत् ॥
तैलशेषं परिज्ञाय क्षौमं मन्त्रेण शोधयेत् ।
कुचप्रलेपनाद्देवि लौहवत् जायते ध्रुवम् ॥

अथ सौभाग्य जननम् ।

केशरञ्चैव निम्बञ्च पङ्कजञ्च निरामयम् ।

धातकीफलपुष्पञ्च जम्बुदुग्धोद्भ संयुतम् ॥
पिष्ट्वा मधुयुतं लेपात् बन्ध्यापि लभते सुतम् ।
दृष्ट्वा नवप्रसूता वा दुर्भगा सुभगा भवेत् ॥

अथ लेपवराङ्गयोः ।

20770

निम्बकाष्ठेन मधुना धूपयित्वा भगं स्त्रिया ।
सुभगासौ भवेन्नारी पति दासो भविष्यति ॥
खञ्जरीटस्य मांसस्य मधुना सह पेषयेत् ।
प्रातःकाले योनिलेपात् पुरुषो दासतामियात् ॥
माहिष नवनीतञ्च कुष्ठञ्च मधुयष्टिकम् ।
भगलेपन सौभाग्यात् पतिर्दासो भविष्यति ॥
माहिषं नवनीतञ्च मिश्रितं तत्समं मधु ।
बदरिबीजसारञ्च पिष्ट्वा एकत्र कारयेत् ॥
एभिः संमर्द्दनात्ते तेजस्विनाङ्गना भवेत् ।
गोरोचना महादेवि ऋतुशोणित भाविता ॥
तत्कृतं तिलकं यस्य स नरोऽयं निरीक्षते ।
तञ्च सर्व्वं वशं कुर्य्यान्नात्र कार्य्य विचारणा ॥
सैन्धवं कृष्णलवणं सौवीरं मत्स्यपित्तकम् ।
मधुसर्पिः सितायुक्तं कुर्य्यात्तत् भगलेपनात् ।
यः पुमान् मैथुनं गच्छेन्नान्यां नारी स गच्छति ॥

अथ स्त्रीवशीकरणम् ।

पुष्यायाञ्च हरेत् पुष्पं भरण्यान्तु फलं तथा ।
पल्लवञ्च विशाखायां हस्तायां पत्रमेव च ।
मूलायान्तु तथा मूलं धुस्तूरस्य समानयेत् ।
पिष्ट्वा कर्पूरयोगेन रोचना कुमकुमेन च ।
तिलकैः स्त्रीवशं याति यदि साक्षादरुन्धतीम् ॥

कोकिलाक्षं मूकशिम्बी शतावरीन्तथैव च।
गोक्षुरं गणिकारञ्च वाय्यालक तथैव च॥
मद्दाकुष्माण्डमूलञ्च एकीकृत्यञ्च चूर्णयेत्।
शुष्कपात्रेण तत् चूर्णं रक्षयेत् यत्नपूर्व्वकम्॥
दुग्धेन सहितं देवि पिवेद्रात्रौ समाहितः।
नानागुणं भवेत्तस्य कामिनीवश्यको भवेत्॥
कन्दर्पहरनारीनां दर्पहन्ता भविष्यति।
पुष्यायां वा मघायां वा हस्तायां वा तथैव च॥
श्वेतार्कमूलमानीय कथ्यां बद्धा रतिञ्चरेत्।
पतिपुत्रपरित्यक्ता तस्यार्थे व्रजति ध्रुवम्॥

ओं चामुण्डे जय जय स्तम्भय स्तम्भय मोहय मोहय सर्व्वं मां त्वां दम दम स्वाहा। इमं मन्त्रं एकादशवारं जप्त्वा पुष्पमभिमन्त्र्य यस्मै दीयते सा तस्य वश्य भवति।

ओं कामदेव हस्तमपर्णा उत्तम कुरु कुरु स्वाहा।
अनेन सप्तधाभिमन्त्र्य यं पश्यति सा वश्या भवति॥
अपभाषा प्रवक्ष्यामि मन्त्रं स्त्रीवशीकरणम्।
यस्य साधनमात्रेण शक्तिसाधनमुत्तमम्॥

अस्य मन्त्र यथा।

मन्त्रेणानेन देवेशि त्रिवारं सलिलं पिवेत्।
सर्व्वं त्यक्त्वा च सा नारी तस्य सङ्गी भवेद् ध्रुवम्॥

अथ दम्पती प्रीतिजननम्।

ब्रह्मयष्टि वचा कुष्ठं मधुना सह पेषयेत्।
अङ्गलेपाञ्च वनिता नान्य भर्त्तारमिच्छति॥
रतिकाले महादेवि शृणुष्व पर्व्वतात्मजे।
निजशुक्रं गृहीत्वा तु वामहस्ते नयेत् पुमान्।

कामिनीचरणं वामौ लेपनात् स स्त्रियः प्रियः ।
नीलोत्पलं समं पूगं प्रदद्याच्चापराजिताम् ।
यस्य मनोभिवाञ्छया वश्यंयाति वराङ्गना ॥
हयमारक मञ्जिष्ठा मालतीकुसुमानि च ।
तण्डुलानि प्रियङ्गुली पेषयेदेकयोगतः ।
अनेन लिप्तांलिङ्ग कामिनी वंशकृत् भवेत् ॥
कपित्थरस कह्लारं पिप्पली मधुयष्टिका ।
मधुना च समं पिष्टा लेपनाच्च वराङ्गयोः ॥
दम्पतीप्रीतिमाप्नोति प्राणान्ते नापगच्छति ।
सैन्धवञ्च महादेवि पारावतमलं मधु ।
एभिस्तु लिप्त लिङ्गस्तु कामिनी वश्यकृद्भवेत् ॥
दम्पत्योः प्रीतिजननं नित्य लेपाद्वराङ्गयो ।
कुर्य्याद्वशीकृतं यच्च धूपैश्च तिलकं तथा ॥

अथ जगद्वशीकरणम् ।

मनःशिला पलमेकं सगोरोचनकुमकुमम् ।
एभिस्तु तिलक कुर्य्यात् जगद्वश्य न संशयः ॥
सहदेवा भृङ्गराज श्वेतापराजिता वच ।
तेनैवं तिलकं दत्त्वा त्रैलोक्यं वशमानयेत् ॥
ओं ह्रीं समासेयं सौभाग्यं गौरि देहि मे ॥
गोदन्तं हरितालञ्च संयुतं काकजङ्घयोः ।
चूर्णं कृत्वा यच्छिरसि दीयते स वशो भवेत् ॥
श्वेतापराजितामूलं पिष्ट्वा च रोचना सह ।
यः पश्येत्तिलके नैवं वशी कुर्य्यान्न संशयः ॥

तिलककरणं मन्त्रस्तु ॥

ओं रक्तचामुण्डे अमुकं मेवशमानय स्वाहा ।
ओं ह्रीं ह्रीं हूं फट् अयं मन्त्रं अयुत जपेत् ।

गोरोचना सरक्तेन तिलके च वशी भवेत् ॥
भृङ्गराजस्य मूलञ्च पिष्ट्वा शुक्रेण संयुतम् ।
अक्षिणीचाञ्जयित्वा च वशीकुर्य्याज्जगत्त्रयम् ॥

अथ मोहनम् ।

भृङ्गराजहस्तोत्पलं श्वेतगोरोचनरोचन ।
पिष्ट्वा तु तिलकं कृत्वा मोहयेत्तु जगत्त्रयम् ॥

ओं सर सर ओं ओं स्वाहा ।

अनेन मन्त्रेण उदकं सप्तवाराभिमन्त्रितम् ।
प्रातश्चक्षुसि संदत्वा मोहयेत् भुवनत्रयम् ॥

अन्यच्च ।

ओं दण्डाय महादण्डाय स्वाहा

इति मन्त्रेण वस्त्रान्तिके ग्रन्थिं बद्धा सर्व्वं मोहयेत् ।
राजाप्रजाबन्धुबान्धवस्त्राजामित्रं परीक्षोभय ।
आनि आनि चानि चानि मोहि मोहि ह्रीं ह्रीं श्रीं श्रीं
जगद्वशं भवतु स्वाहा ।
अनेन मन्त्रेण मुखमार्ज्जनं कुर्य्यात् तदा सर्व्वं वशं भवेत् ।
ह्रींकार सप्तधा प्रीतिरसमारससंयुतम् ।
ललाटे तिलकं कृत्वा यो जनं वशमानरेत् ॥
यस्य नाम गृहीत्वा तु मायावीजं त्रिधा पठेत् ।
मुक्तकेशोर्द्ध मुखे नैव मुखमार्ज्जनमाचरेत् ॥
सत्यं सत्यं महादेवि स सर्व्वं वशमानयेत् ॥

अथ वीर्य्यजननम् ।

ईश्वरोवाच ।

अत्यम्लं लवणं क्षारं शाकानि कटुतिक्तकम् ।
शुष्कं पर्य्युसितञ्चैव यथेष्टभोजनं त्यजेत् ॥

अथातः संप्रवक्ष्यामि प्रयोगं वीर्य्यकारणम् ।
यस्य भक्षणमात्रेण वृद्धोपि तरुणायते ॥
चूर्णं विदार्य्याः संकृत्य स्वरसेनैव भावितम् ।
शर्करा मधुसर्पिर्भिर्युत लिह्वा पयः पिवेत् ॥
वृद्धो युवा भवेद्देवि सत्यं सत्यं न चान्यथा ॥
विदारीकन्दचूर्णन्तु घृतेन पयसा पिवेत् ।
औडुम्बररसेनैव वृद्धापि तरुणायते ॥
बीजं गोनवनीतेन समंयुक्तं प्रियो भवेत् ।
तूर्णं हन्तिक वृद्धन्तु महिषाणां वसां तथा ।
क्रमियातां पातयेत्तु सफलं नात्र संशयः ॥
विष्णुक्रान्तामूलशिखां करे बद्धा तु यो रमेत् ।
पट्टसूत्रेण वै देवि स्थिरवीर्य्यं भवेद् ध्रुवम् ॥
कृष्णायाश्च चतुर्द्दश्यां कथ्यां बद्धा समाहितः ।
हरेत् लाङ्गलिकामूलं सिंहे च मकरादिकान् ॥

अथ बलवर्द्धनम् ।

आर्द्रकस्य च मूलञ्च कृत्तिकायां समुद्धरेत् ।
मुखे क्षिप्त्वा स्वरञ्चापि यदा च वने गच्छति ।
महाबलो महावीर्य्य हस्तिं हन्ति न संशयः ॥

अथ श्रुतिधारणम् ।

धात्रीमूलं समानीय तिलेन सह चूर्णयेत् ।
मासैकं प्रातः संभुक्ता नरः श्रुतिधरो भवेत् ॥

अथ अस्त्रधारणम् ।

माल्लमूलं समानीय हस्ते बद्धा गतो वने ।
तस्य देहेषु शस्त्राणि कदाचिन्न पतन्ति च ॥

अथ गात्रस्पन्दन कथनम् ।

अथातः संप्रवक्ष्यामि गात्रस्पन्दनजं फलम् ।
यज्ज्ञात्वा च विजानीयात् शुभाशुभफलं नरः ॥
शिरस्पन्दनमैश्वर्य्यं ललाटं रोगकारणम् ।
लाभश्च दक्षिणे नेत्रे कलहं वामलोचने ॥
उभयोः शोकवार्त्ताश्च नासोर्मरणमेव च ॥
ओष्ठे तु कलहश्चैव अधरे मिष्टभोजनम् ।
दन्तमूलस्पन्दने अवश्यं मांसभोजनम् ॥
स्पन्देन कर्णयो वापि फलसङ्गीत श्रवणम् ।
कण्ठे मारात्मकं योगं कदाचिज्जीवयद्भवेत् ॥
अर्थलाभं दक्षिणे भुजे स्त्रीलाभं वामभुजके ।
लक्ष्मीर्वृद्धि दक्षिणे पृष्ठे वामे च परदारकम् ॥
उभौ च श्रीवृद्धिः स्यान्नाभौ च मरणं भवेत् ।
दक्षकक्ष्यां वस्त्रलाभं वामे मित्र समागमम् ।
उत्सवं उभयोः कक्ष्योः लिङ्गे च युवती स्त्रियम् ॥
भूमिलाभं दक्षिणे गण्डे वामे वृद्धि उभे धनम् ।
विदेशगमनं गुह्ये राजभयं पददक्षिणे ।
वामपादे च गमनं उभयो राजसेवनम् ॥
एवं विलिखयेत् स्पन्दं शुभाशुभफलं लभेत् ।

इति श्रीहरगौरी संवादे गौरीकाञ्चलिका
तन्त्रं समाप्तम् ।

